


## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूर (आ० प्र०)

संपुटः ३ | 15 FEBRUARY 1965 | क्रमाङ्कः २



माघाङ्कः ] शकवर्षः १८८६ [ मूल्यम् ४० पैसाः

# विषयसूचिका





वाणीं भजत गैर्वाणीम् !



# अव देव भारतं तव देव भाषितम् !

अव देव भारतं तव देव भाषितम् ।
भव धर्मपालने चोदको नितरम् ॥
अतिवृष्टिपातजां धृतिहृतिमपाकुरु
प्रबलाब्धिकल्लोलवेल्लनं शमय ।
वग्रहपीड़िताऽवशजनं परिरक्ष
कुक्षिबुभुक्षां अभीक्ष्णं विमोचय ॥ अव ॥
अनुदारहृदयतां क्षिणु देव दूरतः
तनु सौख्यवर्धनम् ननु सर्वमर्थनम् ।
अरिनिकरमर्दनं परिकरविवर्धनम्
घटय, विघटय भयं परनिरोधोद्भवम् ॥ अव ॥
तण्डुला गोधुमा आढकाश्चणकाश्च
गृहिता मोहितैः धनलुब्धदनुजैः ।
अर्घा महत्तरा आयाश्च लघुतराः
पायादिमां प्रजां को वा त्वदन्यः ? ॥ अव ॥
भ्रंशमपभ्रंशमपि शंसमानाः
भारतभारतीं बहु विस्मरन्ति ।
परवचोदास्यतां बहु वर्णयन्ति
परिशमय वादांश्च शिथिलय विभेदान् ॥ अव ॥

# सम्पादकीयम्



परस्परं विवादे तु वयं पंच शतं च ते ।
अन्यैस्सह विवादे तु वयं पंचोत्तरं शतम् ॥

भारतीयाः सहोदराः,

स्मरत भारते धर्मराजस्य इदं वचनं । अस्माकमन्योन्यकलहे पाण्डवा वयं पंच, ते च कौरवाः शतं वर्गीभूय परस्परं युध्यामः । अन्यैः सह विवादे प्राप्ते तु वयं पाण्डवाः कौरवाश्च ऐकीभूय पंचाधिकशतसंख्याकाः ऐकमत्येनैव परेण योत्स्यामः इति खलु अस्य भावः । न केवलं भावरमणीयोयं श्लोकः, अपि तु अत्रत्योभावः आचरणेनापि सम्मानितः पाण्डवैः । घोषयात्रासमये गन्धर्वराजेन नीयमाने दुर्योधने भीमार्जुनौ तेन सह प्रयुध्य स्वसोदरं दुर्योधनं अमोचयताम् च ।

अतः भारतीया राजनीतिः एवंविधा स्याच्चेत् बहु शुभं भवेत् देशस्य । पालकेषु छिद्रमन्विष्य प्रहर्तुमुद्यमः, अरिभिस्सह सम्मिलनं, देशावमानकरः प्रचारः, प्रजाक्षेमभंजनम् इत्यादयः क्रियाः सुतरां अनुचिताः मातुस्तन्यमापीय तद्वक्षसि मुष्टिघातवत् स्वकृतघ्नतामेव प्रकटयन्ति । पूर्वेतिहासे पुनः पुनः पठामः भारतदेशस्य अन्याक्रान्ततायाः कारणानि । दैवेन वा भाग्येन वा यथाकथंचित् पुनः स्वतन्त्रे अस्मद्देशे मुखमुन्नमयति सदृशेषु देशेषु पुनरपि प्राचीनप्रमादानां आवर्तनं नैव क्षेममावहेत् । धर्मनिरपेक्षपालने अस्मिन् हिन्दवः मुसल्मानाः क्रैस्तवाः बौद्धाः इत्यादयस्सर्वेपि भारतीयाः स्वदेशरक्षणाय एकीभावं अवलम्बेरन् । तथैव कांग्रेसस्वतंत्रगणतंत्र - समाजवादि - द्राविडसंघ - जनसंघादयः स्वीयभेदभावं

परित्यज्य देशरक्षणे स्वभुजानर्पयेयुः । यदि अभिप्रायभेदाः स्युः ते अन्योन्य-विचारणेनैव दूरीकर्तव्याः न तु देशस्य दुर्दशाप्रदानेन ।

यन्त्रागारस्थापने कर्मागारस्थापने सेतुबन्धने अयोमार्गप्रसारणे भाषावादे च दोषं कंचन आरोप्य विमर्शनं न समुचितं विज्ञतायाः । तादृशं कारणमवलम्ब्य च असहायता परसहायता च सुतरां न युज्यते ।

अरौ कराले उत्तरद्वारमाघट्टयति सति अस्मिन् काले अस्माकं एकता निर्भीकता च आवश्यकी । देशद्रोहकार्याणि मर्मच्छेदकृत्यानि च न देशस्यैव आत्मनोपि विनाशायैव भविष्यन्ति । जयचन्द्रः अत्र विषये स्मर्तव्यो भवति । कुटिलाश्शत्रवः अन्तर्भेदं जनयित्वैव अन्तः प्रवेक्ष्यन्ति । अतः अन्तरं अदत्वैव अतिजागरूकैः अस्माभिः देशः परिरक्षणीयः ।

सह नाववतु । सहनौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु । मा विद्विषावहै ॥

## सुक्तकम्

संकलयिता — मा. शिवरामराजः

विष्णोरागमनं निशम्य सहसा, धृत्वा फणीन्द्रं गुणं
कौपीनं परिधाय चर्म करिणः, शम्भुः पुरो धावितः ।
दृष्ट्वा विष्णुरथं सकम्पहृदयः सर्पोऽपतद्भूतले,
कृत्तिर्विस्खलिता, ह्रिया नतमुखो नग्नो हरः पातु वः ॥



# इन्दुमतीस्वयंवरम्

[ रचयिता - श्री पि. एम्. पद्मनाभशर्मा ]

( पूर्वानुबन्धः )



मंत्रि – [ अपवार्य ] संप्राप्त एवाहम् । वयस्येन तु न ज्ञातः । भवतु । अहमेव गत्वा अनेन वृत्तान्तेन समाश्वासयामि ।

राजा – कः कोत्र भोः ।

[प्रविष्य दौवारिकः]

आज्ञपयतु युवराजः ?

राजा – नाद्याप्यागतो मंत्रिकुमारः ?

दौवा – [ सभयम् ] महाराज ! प्रागेव बहोः कालादागतो मंत्रिकुमारः ।

राजा – कथं, आगतः ! [इति अभितः पश्यति]

मंत्रि – [उपसृत्य] आं वयस्य, प्रागेव बहोः कालादागतोऽहम् । चिन्ताकुलेन वयस्येन तु न दृष्टः ।

राजा – [आत्मगतम् ] अपि नाम दृष्टस्स्यात् मदीयः उद्वेगः ?

मंत्रि – [दौवारिकं प्रति] अरे, स्वं नियोगमशून्यं कुरु ।

[दौवारिकस्तथेति निष्कान्तः]

मंत्रि – [आसने उपविश्य] सखे, किमिति अनवरतं चिन्ताकुल इव भवान् ?

राजा – [ आत्मगतम् ] कथंवास्मिन्नपि सहसा निवेदयितुं शक्यते ? [सलज्जं] यद्यभिनिवेशमिमं निवेदयेयं अनिश्चितायां तस्यां वृथानुरागो निबद्ध इति

परिहसनीयो भवेयम् । [विचिन्त्य] भवतु । एवं कथयिष्यामि । [प्रकाशम्] वयस्य, स्वयंवराय प्रस्थितानामस्माकं हेमाङ्गदप्रभृतिभिस्सह सञ्जातः किल समागमः ? भाषणावसरे तावत् तैः अस्मत्तातचरण-दत्तपराभवजनितवैरतया संसूचितं किञ्चिदिव वैमनस्यम् । कदा-चित्तेऽत्र प्रत्यवतिष्ठेयुरस्मानिति विचिन्तयन्नासम् । अतः आगतमपि भवन्तं अनालोक्य स्थितमिति न कार्यं किञ्चिदपि वैमनस्यम् ।

मंत्रि – [आत्मगतम्] अहो, सर्वस्याप्यपलापनम् । भवतु । वयस्यस्यैव मुखेन सर्वं व्यक्तं करिष्यामि । [प्रकाशम्] वयस्य, भवतः शरीरावस्थामी-दृशीं विलोकयतो मे न भवति निश्चयः । कुतः —

**म्लानं शरीरं वदनं तु पाण्डरं श्वासापरक्ताधरशोचनीयकम् ।**
**प्रजागराताम्रान्तधृताम्बुलोचनं करः प्रकोष्ठार्पितमुक्तकङ्कणः ॥**

अतः वयस्य ! श्रोतव्यं चेत् कथ्यताम् । अन्यथा कथं चिकित्सा कर्तुं शक्यते ?

राजा – [आत्मगतम्] किमर्थमस्मिन्नप्यपलपामि । भवतु सत्यमेव वदामि येन उपायः कथितो भवेत् । [प्रकाशम्] वयस्य, यदि मम मनोरथं वदेयं तर्हि परिहसनीयो भवेयमिति लज्जैव भवति ।

मंत्रि – सखे, भवतोप्येवंविधावस्था संजातेति परिशीलयतामस्माकं कुतः परिहासकथा ?

राजा – वयस्य, विदर्भजायामनिश्चितायामपि महान् प्रेमातिशयः संजातः ! तेनोद्वेगोऽनुभूयते । तद्यदि भवतोऽनुमतं, उपायः चिन्त्यताम् ।

मंत्रि – वयस्य, सफल एव भविष्यति भवतः उद्वेगः !

राजा – [ससंभ्रमम्] कथमिव !

मंत्रि – वयस्य, अद्य प्रातः आरोग्यकरं पादगमनमिति नातिदूरस्थितं रमणीयं प्रमदोद्यानं गतवानहम् ।

[क्रमशः]

विज्ञान वेदिका

# भारतीयो विज्ञानवादः

लेखकः — लोकमिश्रशास्त्री,
गुरुकुलम्, अयोध्या.

( पूर्वानुबन्धः )

अथापि सृष्टिविज्ञानमूलमपि वेदे । तत्र ये प्रश्नाः कृताः सन्ति ते तावत वेदार्थजिज्ञासुभिरवश्यमेव ज्ञातव्याः ।

"किं स्विदासीदधिष्ठानमारम्भणं कतमत स्वित कथासीत ।
यतो भूमिं जनयन् विश्वकर्मा विद्यामौर्णोन्महिना विश्वचक्षाः ॥
किंस्विद्वनं क उ स वृक्ष आस, यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदुतद्यदध्यतिष्ठद् भुवनानि धारयन् ॥

ऋ ८-३-१६

प्रश्नो भवति तस्य परमेश्वरस्य किमधिष्ठानमासीत् यत्रोपविश्य जगतः रचना कृता ? अथ कया सामग्र्या रचितं जगत ? सा सामग्री कीदृश्यासीत यया द्याम् भूमिञ्च जनयन् स्वमहत्वेन सम्पूर्ण जगदाच्छादितम् ? अथ च कं वनं छित्वा शोभनानि भुवनानि रचितानि सन्ति ? कश्च तेषां आधारकोऽस्ति ? स्वयमुत्तरयति वेदभगवान्-यस्य सर्वत्र चक्षुर्मुखं बाहूः पादश्च प्रसृतोऽस्ति स एकः महान् देवः "बाहुभ्यां संधमति" गतिं ददाति, पतनशीलैः परमाणुभिः द्यावाभूमी जनयन् सर्वं जगत धारयन् विद्यमानोऽस्ति इति ।

एतेन तस्याधारस्यावश्यकतैव नास्ति, यश्चैकदेशीयः तस्य कृते आधारोऽपेक्ष्यते । दृश्यमाने संसारे ईश्वर उपरि नीचैः बाह्याभ्यन्तरे सर्वतः परिपूर्णोऽस्ति । अथ चञ्चलस्य गतिमतः पदार्थस्य विनाशो न भूतो न भविष्यति । तत्र गतिप्रदानेन स्वनिरीक्षणेन सृष्टिं सृजति । एतेनेत्यपि सिद्ध्यति यत परमात्मा जगतः निमित्तकारणम् ।

## गणितविद्याविज्ञानम्

अङ्क, वीज, रेखागणितविद्याविज्ञानं परिलक्ष्यते वेदे। सेयं गणितविद्या वेदाङ्ग ज्योतिषशास्त्रे सम्यकृतया वर्णिता। "अग्न आयाहि" इति मन्त्रे वीजगणितस्य संकेतः प्राप्यते। रेखागणितस्य मन्त्रे परिधिशब्देनोपदेशलक्षणं विज्ञायते। इयमपि विद्या विस्तरेण वर्णिता ज्योतिषशास्त्रे। तारविद्यायाः संकेतोऽपि तं यत्नेन निर्माय, उत्तमव्यवहारसिद्ध्यर्थं युद्धादिस्थले कार्यं क्रियते। वैद्यकशास्त्रमूलोद्देशः "सुमित्रिया न आपऽओषधयः" इत्यादिमन्त्रे मिलति।

एवञ्च सर्वासां विज्ञानविद्यानां मूलं वेद एव। वेदत एव विज्ञानस्य प्रसारोऽन्यान्यगणितज्यौतिषरसायनदर्शनचिकित्सादिग्रन्थेषु सम्यक्तयाऽऽधुनापि वरीवर्तते। तत्तद्विषयेष्वपि आर्यभट्ट, वराहमिहिर, भास्कराचार्य, नागार्जुन, पतञ्जलि, चरकाचार्या एवं सुश्रुतप्रभृतयः, विद्वांसः सादरं सोत्साहं स्मर्यन्ते। यदाऽऽन्यदेशा अज्ञानावस्थायामासन्, तदा भारतं सभ्यताशिखरमारूढम्। अद्यतः द्विसहस्रवर्षपूर्वं सर्वमुखीनं भारते विज्ञानं प्रसृतमासीत। विज्ञानमाधुनिकसभ्यतायाः मूलं मन्यते। विज्ञानेनैव मानवसभ्यतोन्नतिपथं गतास्ते। इदानीन्तु बहूनां भारतीयानामेषा धारणा वर्तते यत विज्ञानं पाश्चात्यैर्दत्तम् इति। परञ्चैषा धारणा भ्रमयुक्ता। विज्ञानं पाश्चात्यैर्नैवाप्तम्, किंचास्माकं पूर्वजानां साधनया प्राप्तम्। प्राचीनकाले भारते विज्ञानसम्बन्धि महत्वपूर्णं यत् कार्यं सम्पादितं तत्तु ऐतिह्ये तारतम्येन न प्राप्यते। किन्तु पुरातत्वविदां वैज्ञानिकानां गवेषणाभिः निश्चप्रचम्, यत भारतीयविज्ञानमुन्नतिपथं गतमासीत संसारे इति। गणितज्यौतिषाचार्यस्य, आर्यभट्टस्य कृते भारत एव नहि किन्तु समस्ते संसारे उच्चपदं स्वीक्रियते। तेनैव महोदयेन ग्रहणस्य भविष्यवाणी कृता। घोषणा च कृता यत् सूर्यः स्थिरः पृथिवी तं परितः परिभ्रयति येन नक्तं दिवं भवति इति। भारते पूर्वमेव पृथिव्याः गुरुत्वाकर्षणशक्तेः ज्ञानं जातम्। एकतः नवपर्यन्तमङ्कस्य शून्यस्य च महत्वम् एवं दशमलवपद्धतेश्च।

यूरूपीयास्तु त्रयोदश्यां चतुर्दश्यां वा शताब्द्यां शिक्षिताः। कथयन्ति जनाः यत् रेखागणितस्य प्रचारो नासीत, यूनानप्रदेशत् भारतेन लब्धं इति। किन्तु आर्यभट्ट, भास्कराचार्याश्च रेखागणितस्य विद्वांस आसन्। न तद्विस्मर्यते सूर्यसिद्धान्ते त्रिकोणमितेरुन्नतं रूपम्, यत् यूनानप्रदेशेऽपि नासीत। तत कथं ज्ञायेत यदि यूनानप्रदेशात् रेखगणितस्य आगमनम्। [ क्रमशः ]

# समीक्षान्वीक्षा

Dr. B. R. Sastry, M. A., Ph. D,
HYDERABAD (A. P.)

अयि संपादकमहोदयाः,

अत्रभवद्भ्यो धन्यवादा यदस्माकं विक्रान्तभारतमिति रूपकं गैर्वाण्यां विमर्शितम्। यच्चास्माकं कृतिं विमर्शका अभ्यनन्दन् तदेतामुक्तिं स्मारयति — "प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः"।

भणितं च विमर्शकेन अत्र "धननन्ददुहितुः दुर्धरायाः चन्द्रगुप्तस्य च प्रेमकलापः वर्णितः। राजतन्त्रदृष्ट्यायं सुघटितोपि औचित्यदृष्ट्या न स्वदते। धननन्दस्य पुत्रभूतोयं तत्सुतामेव कामयेत इति विरुद्धमेतत्। यद्यप्यत्र नाटके चन्द्रगुप्तस्य पुत्रत्वमस्य न निरूपितं तथापि रूढज्ञानानां सहृदयानां मनः उद्वेजयति अयं विषयः"। (गैर्वाणी, १५ जनवरी १९६५, पु. २९.) अत्र विप्रतिपत्तिः।

चन्द्रगुप्तो धननन्ददुहितरं दुर्धरां कामयते इत्यत्र नास्त्यनौचिती, नास्ति विरोधः, नास्ति चोद्वेगधीरिति सविनयं ब्रूमः। अत्र हेतवः —

(१) चन्द्रगुप्तो धननन्दस्य पुत्रो नास्तीति परम्परामाश्रित्य रूपकमिदं निबद्धम्।

(२) परम्परैषा ग्रन्थावल्याम् (Bibliography) सूचितेषु पुस्तकेष्वेव निरूपिता।

(३) चन्द्रगुप्तः, धननन्दः, दुर्धरा, चाणक्यः, अथवा कश्चिदपि जनः रूपके "चन्दगुप्तः धननन्दस्य पुत्र" इति नापि मनुते न च व्याहरति।

(४) उपक्रमप्रभृति उपसंहारान्तं यदिदं रूपकं पौर्वापर्येण पठ्यते तर्हि निर्णीयते एव यच्चन्द्रगुप्तो धननन्दमन्यवंशजमतीवापरिचितं च गणयतीति। धननन्दविषयेप्येवमेवोन्नेतव्यं भवत्येव।

(५) मतिमेतां दुर्धराचन्द्रगुप्तसमागमः–दृश्यम् १२ – द्रढयति।

(६) यदुत चन्द्रगुप्तो धननन्दस्य पुत्र इति परम्परा विमर्शकेन न्यदर्शि तस्याः अस्मिन् रूपके आनर्थक्यम् अनन्वयात्।

रूढज्ञानाः सहृदयाः विक्रान्तभारतमेवमेव विदाङ्कुर्वन्त्विति शम्।



# व्यासवाल्मीकिसंवादः

महाविद्वान्

श्री कांची प्र० भ० अण्णङ्गराचार्यस्वामी

( पूर्वानुबन्धः )

## [ व्यासप्रश्नानुवृत्तिः ]

**व्यासः**– देवाधिदेवेन परमपुरुषेण नारायणेन अतिजघन्यमानुषजन्म किमर्थमास्थितम् ? इति प्रश्नं महान्तस्समादधते–रावणकृतवरप्रार्थनासु मनुष्येष्वत्यन्तमलक्ष्यताधिया "मनुष्येभ्यो माभून्मे वधः" इति प्रार्थनाया विसृष्टत्वात् तदेव मनुष्यजन्म परिगृह्य रावणवधः कर्तव्योऽभूदिति । देवतान्तरैः स्वोपासकेभ्यः प्रदत्तानां वराणामपि परिपालनस्य भगवत्कर्तव्यत्वेन तदनुग्रहस्य अमोघत्वाय मानुषयोनौ जननं भगवत उपपद्यत इति कामं गृह्णीमः । विश्वप्रपञ्चसर्गस्थितिप्रलयधुरीणया अप्रतिहतया स्वसंकल्पशक्त्यैव अवलीलया कर्तुं योग्यं शक्यं च रावणसंहारमुद्दिश्य नानादुःखास्पदभूतायां कर्मभूमाविह अकर्मवश्य[illegible] रसिका अत्र कथमहो ? इतीयमाशङ्का भूयसां महतामपि मनसि विप[illegible] लेशमन्तरेण परिहरणीया श्रीमतेति प्रार्थये । [illegible]यप्रेमातिशयं दर्शयति–गुहेनेति । [illegible] सहितोऽभूत । गुहसन्धानानन्तरमेव

**वाल्मीकिः** – भगवन् ! भगव[illegible]मासीत् । ततः पूर्वं सिद्धमपि सत् श्रीवत्साङ्कमिश्रनाम्ना गुरुवरेण प्रणीतं [illegible]

तव किल किञ्चिद्वरद ! ते ज[illegible]शप्रेमभरस्य प्रकटनं साक्षादवतरणमन्तरा न हि

क्षोदीयस्सुरनरकुलेष्वाश्रितजनान् समाश्लेष्टुं पेष्टुं तदसुखकृतां चावतरसि" इति ।
अयं भावः – भगवान् सत्यमवाप्तसमस्तकामः; स्वसंकल्पमात्रनिर्व्यूढजगज्जन्मस्थेम-
प्रलयादिकश्च । तथाऽपि क्षोदिष्ठसुरनरकुलेष्ववतरणमस्य संश्रितजनसमाश्लेषार्थम्
तद्विरोधिव्रातपेषणार्थं चेति ।

व्यासः– ननु भो गीतायाम् "परित्राणाय सधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगेयुगे" इति यदुक्तम्, तदेव खलु भवदुदाहृते श्लोकेऽप्युक्तम् ; कोऽत्र विशेषः ?

वाल्मीकिः– अस्ति विशेषः । "साधूनां परित्राणाये"ति हि गीताया-मगीयत; तदुपरि चोद्यमवतीर्णम्–किमेतत्सङ्कल्पसाध्यं न भवितुमर्हतीति । परि-त्राणशब्दविवक्षितार्थविवरणेन तच्चोद्यमुदस्यति कूरनाथो गुरुः उदाहृतेन श्लोकेन । अत्र तावत "आश्रितजनान् समाश्लेष्टुम्" इति यदुक्तम् तदेव जीवनाडीभूतम् । ये भगवन्तं साक्षात्कर्तुमीहन्ते, ये च तेन सह संभाषितुमिच्छन्ति, ये च तस्य गाढाश्लेषं कामयन्ते, ये च तस्य पादपद्मपरिसरे स्वयमभ्यर्चनं चिकीर्षन्ति, तेषां तेषां तत्तादृशकामनानिर्वर्तनेन [दर्शनालापाश्लेषादिप्रदानरूपेण] परित्राणार्थं भूतलेऽवतरतीति भगवद्भाष्यकारभाष्यप्रक्रिया । ततोऽप्यतिशयिता खलु निदर्शिता [illegible]मिश्रश्रीसूक्तिः । "आश्रितजनान् समाश्लेष्टु"मिति यत तदिदमनर्घं
जनः रूपके [illegible] नाम भक्तानां जनानां भगवत्संश्लेषरुचिः । भगवतस्तस्य
व्याहरति । [illegible]ल्वस्ति, सा साक्षादवतरणमन्तरा कथमहो फलेग्रहि-
(४) उपक्रमप्रभृति [illegible]ष्यते श्रीवत्साङ्कमिश्रः ।
तर्हि निर्णीयते एव यच्चन्द्रगु[illegible]
गणयतीति । धननन्दविषयेप्येवमेवं
(५) मतिमेतां दुर्धराचन्द्रगुप्त[illegible]चः । अधमानां किङ्कराणां प्रभुवरेण
(६) यदुत चन्द्रगुप्तो धननन्दस्य सर्वोत्तुङ्गस्य परमपुरुषस्य जघन्यैः
न्यदर्शि तस्याः अस्मिन् रूपके आनर्थक्यम् [illegible]नमपहास्यं खलु भवति । मन्मन-
रूढज्ञानाः सहृदयाः विक्रान्तभारतमेवमे[illegible]

---

**वाल्मीकिः**– भगवन्! मत्प्रणीतं श्रीरामायणं यथाभूतार्थभरितं मन्यते वा भवान्? उत अनृतोक्तिमयम्? प्रथमत एतत् यथायथमभिधीयतां तत्रभवता। अथ भवतस्तृप्तिकरमुत्तरमुदीरयेयम्।

**व्यासः** – महर्षे! नाहमप्रामाणिकः; "हसितं भाषितं चैव गतिर्या यच्च चेष्टितम्। तत्सर्वं धर्मवीर्येण यथावत्संप्रपश्यति॥" इति प्रजापतेर्लब्धवरेण तत्रभवता लिखितमेकैकमप्यक्षरं सूनृतमवधारयेऽहम्। विराध-मारीच-रावण-शूर्पणखा-कबन्धादिभिः यद्यत्प्रोक्तमिति तत्र भवता विलिखितमस्ति, तत्सर्वमपि सत्यंमन्यमानेषु मामग्रेसरं विद्धि।

**वाल्मीकिः** – मदुक्तिमखिलं यथाभूतार्थां मन्यते तत्रभवानिति भृशं प्रमोदे। अधुना श्रीमतः परिपूर्णतृप्तिप्रजननं मे सुकरमिति विश्वसिमि। श्रूयतां भगवन्! पितुर्निर्देशेन वनं प्रस्थितवता भगवता दाशरथिना प्रप्रथमं गुहेन सह सङ्गस्सम्पादितः। अत्र चैवं श्लोकसंनिवेशः "गुहेन सहितो राम" इति। रामो गुहेन सहितोऽभूदित्यर्थं मन्येरन् मितधियः। किञ्चिदुच्यते श्रूयताम्। उपात्तः श्लोकः संक्षेपरामायणे (१-१९) "गुहेन सहितो रामो लक्ष्मणेन च सीतये"ति वर्तते। अत्र लक्ष्मणसीतासाहित्यकथनम् अनपेक्षितमेव। कुत इति चेत्, सौमित्रिस्सीता च राममनुजग्मतुरिति कथितमेव स्पष्टमधस्तात्; "तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह" इति "सीताऽप्यनुगता रामं शशिनं रोहिणी यथा" इति च। अतः पुनस्तयोस्सहयोगकथनं व्यर्थमेव स्यात्। व्याख्यातारश्च रसिका अत्र श्रीरामचन्द्रस्वभावानुगुणं व्याचचक्षिरे। एवम् —

"स्वस्मिन्नाशालेशमात्रेण जनितं गुहविषयप्रेमातिशयं दर्शयति–गुहेनेति। रामो गुहेन सहितस्सन् लक्ष्मणेन सीतया च सहितोऽभूत्। गुहसन्धानानन्तरमेव लक्ष्मणसीताभ्यां नित्यानपायिभ्यां साहित्यमासीत्। ततः पूर्वं सिद्धमपि सत् असत्प्रायमासीदित्यर्थः" – इति।

तथाच भक्तजनेष्वेतादृशप्रेमभरस्य प्रकटनं साक्षादवतरणमन्तरा न हि खलु घटेत।

**व्यासः**– गुहमुद्दिश्य ममैषा विचिकित्सा वर्तते । "रामस्यात्मसमस्सखे"ति प्रोक्तं गुहमधिकृत्य तत्रभवतेति स्मरामि । ज्ञानेन शीलेन वृत्तेन कुलेन च सर्वथा विषमः खलु स निषादानां नेता गुहः । जघन्यजातीयो जुगुप्सनीयवेषवृत्तश्च स गुहः कथमिव रघुकुलपतेरात्मसमस्सखा भवितुमर्हति? तदस्तु नाम । तेन सह संश्लेषो रामचन्द्रस्य कथमिव स्पृहणीयस्स्यात्? "गुहेन सहितो रामो लक्ष्मणेन च सीतये"त्येतत् भवदुक्तमेव ननु । तत्रैतादृशविशेषार्थवर्णनं श्रीरामचन्द्रहृदयंगममिति कथं नु विश्वसनीयं स्यात्? भवदुक्तौ नास्त्यप्रत्ययो मम । परंतु रामो भक्तजनसंश्लेषहेवाकीत्ययमर्थः तद्वाचैव सिध्यति वेति मम जिज्ञासा ।

**वाल्मीकिः**– कस्संदेहः? श्रीरामचन्द्रवाचैवायमर्थस्सिध्यति सम्यक् । आरण्यकाण्डे (१९–४०) "कदा न्वहं समेष्यामि भरतेन महात्मना । शत्रुघ्नेन च वीरेण त्वया च रघुनन्दन !" इति सौमित्रिं प्रति रामः प्राह । चित्रकूटगिरिपरिसरमागत्य अमृतप्रायाणि वचांसि भूयांसि व्याहृत्य प्रतिनिवृत्तं भरतं स्मारंस्मारं विलपतो रामस्येदं वचनम् । वत्स सौमित्रे ! भरतेन शत्रुघ्नेन च पुनः कदाऽहं संगतो भवेयमिति कथनं युक्तरूपम्; अत्र तु तावदेव न कथितम् । लक्ष्मण ! त्वया च कदा समेष्यामीति तु कथितम् । संबोध्यमानस्सौमित्रिर्ननु संनिहितः । न तावदयमपि भरतशत्रुघ्नाभ्यां सह प्रयातः । एवं स्थिते 'त्वया च कदा समेष्यामी'ति कथनम् अनन्वितं हि भवति । 'भरतसाहित्याभावेन, विद्यमानाभ्यां सीतालक्ष्मणाभ्यामपि विरहितमात्मानं मन्यमान एवमाह'इति हि व्याख्यातव्यं भवति । 'त्वया च'इत्यत्र चकारोऽनुक्तसमुच्चायक इति गृहीत्वा, सीतया च कदा समेष्यामीत्यर्थो वर्णनीय एव । एवं च रामचन्द्रो भगवान् भक्तजनसंगमे संतोषातिशयं तद्वियोगे निर्वेदातिशयं च बिभर्तीति सुस्पष्टमभूद्धि तद्वाचैव । नास्त्यत्र मात्रयाऽपि विसंवादप्रसक्तिः ॥

[क्रमशः]

# सुलभपाठमाला ६

## ( युष्मच्छब्दः त्रिलिंगः )

अस्य अभ्यासः सम्यक् करणीयः ।

त्वं एकः । युवां द्वौ । यूयं बहवः । त्वां अहं जानामि । युवां अहं जानामि । युष्मान् अहं आह्वयामि । त्वया सह वयं आगच्छामः । युवाभ्यां सह अहं वसामि । युष्माभिः किं कृतम् ? तुभ्यं इदं ददामि । युवाभ्यां किं अपेक्षितम् ? युष्मभ्यं किं भोजनमावश्यकम् ? त्वत् अहं अधिकः । युवाभ्यां न कोपि शूरः । युष्मत् अहं भीतः अस्मि । तव मुखे तिलकं अस्ति । युवयोः रूपं भिन्नं वर्तते । युष्माकं ग्रामः कः ? त्वयि स्थिता मे आशा । युवयोः को वा कृष्णः को वा अर्जुनः ? युष्मासु भारतीयता विराजते ।

त्वां=त्वा, युवां=वां, युष्मान्=वः, तुभ्यं=ते, युवाभ्यां=वां, युष्मभ्यं=वः, तव=ते, युवयोः=वां, युष्माकं=वः एतानि पर्यायपदानि ।

ते=तुभ्यं, तव, वां=युवां, युवाभ्यां, युवयोः, वः=युष्माकम् , युष्मभ्यम् , इति अर्थः ।

**पूरय शून्यस्थलम् —**

(१) — कुत्र वर्तसे ?
(२) — किं पठसि ?
(३) — मां च पश्यन्ति जनाः ।
(४) — सह अहं अपि आगच्छामि ।
(५) — मम च महत् अन्तरम् ।
(६) — अवयोः च महत् अन्तरम् ।
(७) — अस्मभ्यं च इदं धनं प्रदत्तम् ।
(८) — मयि च अयं भारः वर्तते ।
(९) — अहं वृद्धः ।
(१०) — भीतः अहं दूरं गतः ।
(११) — अस्माकं च वैरं मास्तु ॥



# राजाजीकथा १०



## सुलोचनम् (उपलोचनम्)

(आ. वरदराजः)

सुब्बरायशास्त्रिमहोदयाः स्वीयं सुलोचनं कचिन्निधाय व्यस्मार्षुः ।

हे नासे! हे मे प्रिये नासिके! सदा सर्वदा त्वदुपरि अधिरोहेत्साहं भजमानं मदीयं सुलोचनं (उपलोचनं) कुत्र वा गतं? – इत्यप्राक्षीत् ।

नासाऽपि भाषितुमारेभे । "भो! भो! नेत्रभ्रातरौ । पुण्यं वामस्तु । अपि नाम सुलोचनमन्विष्य दातुं शक्येत? अस्मत्स्वामी किल पठितुं अन्यद्वा यत्किञ्चित्सुनिशितं द्रष्टुं सम्यङ्न पारयति । भृशं व्याकुलितचित्तो भवति"– इति नेत्रे सानुनयं आज्ञापयामास ।

नासायाः प्रस्तावं नेत्रे न गणयतः स्म । साधु साधु, सम्यगस्ति समाचारः । मम धाम सर्वं त्वदधीनम्; (भाषायां-मुक्कट्टालु मूक्कण्णाडि-इति व्यवहारः) कुतो वाऽन्तरा नः प्रसंगः-इत्याह दक्षिणाक्षि । "सखि! नासे! त्वं खलु अद्य यावत् मदीयं (मुक्कट्टालु-नासीयादर्शौ) इति घोषयन्ती सगर्वं नृत्यसि । आवश्यकं चेत् त्वयैवान्वेष्टव्यं"-इत्याह वामाक्षि, समर्थयदिव सहयोगि दक्षिणाक्षि ।

"अस्तु नाम" इत्यङ्गीकृत्य नासिका गृहे सर्वत्र कोणे च अन्वेषितवती । परं तु, न तत् कुत्राऽपि लब्धम् । नासीयादर्शस्य (मुक्कट्टालु) यदि कश्चिद्गन्धविशेषस्स्यात् तर्हि तस्य प्रत्यभिज्ञानं सुशकम् ।

अथ चिन्ताकुला किंकर्तव्यताविमूढा च सा नासाऽन्ते शास्त्रिमहोदयमब्रवीत्–"भवदीयं उपलोचनं न मे लब्धं चिरादन्वेषणेऽपि। अक्षिद्वयमेव प्रष्टव्यं"-इति।

शास्त्री पुनः नेत्रद्वयं प्रार्थयामास-"अक्षियुगल! त्वमसि मम जीवनं, त्वमसि मम भूषणं; त्वदर्थमेव च तदुपनेत्रं क्रीतं मया। न जाने, कुत्र वा तन्निक्षिप्तं। सर्वथा विस्मृतम्। कृपया श्रममविगणय्य अन्विष्य दीयतां तत्। पुण्यं वोऽस्तु"-इति।

नेत्रे शास्त्रिणो वचनं अनादृत्य स्तब्धे अभवताम्। तदात्वे कर्णः प्राप्तावकाशः प्राहैवं – "हे नेत्रे! एवमेव वयमन्योन्यं स्पर्धया असूयाद्वेषेर्ष्यादिना वा ऐकमत्यं विच्छिन्नं कृत्वा अस्मत्कार्यक्रमं यदि न करवाम तर्हि सर्वैरपि तत्फलितं कष्टनष्टादिकं अवश्यमनुभोक्तव्यं भवेत्। अतोऽस्माभिः संभूय स्वस्वधर्मनिर्वहणं कर्तव्यम्" इति।

मुखमप्येतदेव गीतं जगौ– "पञ्चेन्द्रियाणि हि पञ्च गावः। पालकेन गावः स्वायत्तीकर्तव्याः। नो चेत्ताः स्वेच्छया यत्र क्वाऽपि गच्छेयुः। तद्वदेव आत्मनोपि इन्द्रियनिग्रहः अवश्यकर्तव्यः, तदानीमेव इन्द्रियैः स सुखी भवितुमर्हति। गोभ्यः घासग्रासादिदेयमेव। ताः परिरक्षणीया एव। तदानीमेव ता गावः बलपुष्टिविवर्धकं समीचीनं क्षीरं प्रदास्यन्ति। कति वा शास्त्राणि अधीयतां नाम कामं, कियान् वा महान् विद्वान् कुतो न स्यात्, सर्वमपि वैदुष्यं व्यर्थमेव तस्य योऽजितेन्द्रियः। स निरानन्दो भविष्यति यस्य अधीतानि शास्त्राण्यफलानि। स्मर्यते च ––

"यश्शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्"॥

अतः इन्द्रियाणां तत्तद्विषयेषु नियोजनमेव वरीयः-इति परमार्थं प्राह।

अथैतावता प्रसंगेन नेत्रयोः उन्मीलनं प्रबोधो जातः। श्रद्धयाऽन्वेषितमुपलोचनम्, उपलब्धं च तदन्ते।

पार्श्वगतमेव वस्तु नासा जिघ्राति, जानाति च। नेत्रे पुनः अतिदूरे विद्योतमानानि नक्षत्राण्यपि द्रष्टुं प्रभवतः। इयमद्भुता शक्तिः नेत्रयोः।

अथ नासायाः महत्तामपि परिशीलयत। क्षणिकानि तिरोहितान्यपि वस्तूनि नासयाऽघ्राय ज्ञातुं शक्यन्ते; न तानि नेत्राभ्यां गृह्यन्ते। यद्घ्राणं गृह्णाति न तन्नेत्रमित्यस्ति व्यवस्था। पूर्वेद्युः प्रपूर्वेद्युर्वा भगिनी शिरसि चूडायां मल्लीकुसमप्रतिसरं धृतवतीति मन्यताम्। परेद्युरपि यतःकुतश्चिदागतो भ्राता परिमलमाघ्राय गृह्णाति भगिन्या मल्लीकुसुमानि धृतानीति। यद्यपि ह्यः स्थितां पुष्पमालां नाद्य नेत्रं द्रष्टुं शक्नोति, तथापि घ्राणं तद्गन्धेन तां गृह्णाति। एवमेव तमेव पन्थानं, येन चोरः ह्यो निशि गतः, अद्य कुक्कुरः आघ्रायाघ्राय गृह्णाति। तथैव मार्जारः तं मार्गमनुसृत्य मूषिकं मार्गयति, येन स ह्यः परह्यो वा नक्तं गतः। इत्थं घ्राणस्य महत्ता व्यवस्थिता यतस्तदाघ्राय गृह्णाति यन्न दृश्यं-सर्वात्मना यन्न दृष्टिगोचरं भवति।

घ्राणं वा नेत्रं वा न तत् गृह्णाति यत् श्रोत्रेण श्रुत्वा गृह्यते, गीतं नाम-संगीतम्।

स्मारस्य कथा अतिविचित्रा। दृष्ट्वा श्रुत्वाऽऽघ्राय स्पृष्ट्वा अनुभूतानां वस्तूनां स्मृतिः आत्रिंशद्वर्षं ततोऽप्यधिकं वा कालं अनुवर्तमाना नाशं गच्छति। आवश्यकतायां सत्यां, पुरातनं चिट्ठा पुस्तकं (गणांकप्रदर्शिनीं) दृष्ट्वा प्राक् कदाचित् दत्तं आदत्तं च यथा स्मर्तुं शक्यते तथैव इन्द्रियजन्यज्ञानेन चिरस्थायी संस्कारो जायते, यतः कालगर्भे विलीना अपि पदार्थाः स्मर्तुं शक्यन्ते। इन्द्रियाणां शक्तिः तात्कालिकं अनुभवात्मकं ज्ञानं जनयति चेत् ज्ञानशक्तिः पुरातनानपि विषयान् साक्षादिव मनोनेत्रस्य पुरस्तादुपस्थापयति। प्राक् षष्टेर्वत्सराणां, कदाचित् श्रुतो मे मातुः पितुश्च कण्ठस्वरः स्मृतिपथं गतस्सन् इत्थं प्रतिभाति यथा स इदानीमेव श्रूयते।

कालधर्मं गतानां पूर्वजानां कण्ठस्वरः (आप्तवाक्यं) स्मर्यते चेत् शर्करामिश्रं पीयमानं दुग्धं (पीयूषं) इव प्रतीयते। तद्वत् तेषां आकृतिविशेषाः, सप्रेमनिर्भरं कृताः गात्रस्पर्शविमर्शाश्च यदि स्मृतिपथं आगमिष्यन्ति, तर्हि भूतवर्तमानयोः कालयोर्भेद एव लुप्यते।

संस्मृतयो यादृशं मधुरं आनन्दं जनयन्ति, तादृशः स न कस्मादपि लब्धुं शक्यते। मधुरान्मधुर आनन्दः न कुतोऽप्यन्यत्र संस्मृतिभ्यः॥



# ज्ञानम् विक्रीयते



"साहित्यभूषणं" पडाल ब्रह्मारेड्डिः,
कोंकुदुरु.

अस्ति लावण्यवती नाम नगरम् । एकदा तत्र परमानन्दनामधेय एकः कपटवेषधारी महर्षिः स्वशिष्यैः साकमागच्छत । काषायवस्त्रधारिणः कमण्डलुपाणिनश्च तस्य शिष्या मुद्रितचीटिका नगरे सर्वत्र व्यतरन् । सर्वे जनाः ताः चीटिकाः पठित्वा अतुष्यन् । तासु चीटिकासु विज्ञापनमित्थं मुद्रितस्ति– विश्वविख्यातपरमानन्दमहर्षिणा मूर्खेभ्यो परेद्युः ज्ञानं विक्रीयेत । विश्वे स्थितेषु मूर्खेषु दयमानो महर्षिः बहुपरिश्रमेण नवीनोपायमन्विष्य मूर्खत्वमपनोदयति । शुल्कं केवलमेकशतरूप्यकाण्येव । शुल्कन्तु प्रथमतः एव देयम् । एकदिनमात्रमत्र स्थित्वा ज्ञानं विक्रीयते । अतः पुनरलभ्योऽवसर इति सर्वे मूर्खाः त्वरन्ताम् इति ।

एकत्र द्वौ जनौ परस्परं आलपतः स्म ।

**प्रथमः कथयति** – "अङ्ग ! तव ज्येष्टपुत्रोऽतीव मूर्खः । अतः त्वं स्वपुत्राय महर्षिणा ज्ञानं दापयसि वा न वा ? यदि एकशतरूप्यकेभ्यो मितंपचत्वं कुर्याः तर्हि कदापि तस्य मूर्खत्वं न नंक्ष्यति ।

**अपर प्रतिवदति** – "अहमवश्यमेक शतरूप्यकाणि दत्वा मम पुत्राय ज्ञानं दापयिष्यामि । किन्तु तव भार्याऽपि ईषन्मूर्खेति तर्के । गृहे गृहिणी एव मूर्खा चेत् सर्वत्र मूर्खत्वसाम्राज्यमेव स्यात । अतः त्वं किं चिन्तयसि ?"

**प्रथमो बदति**– "मम भार्या एव किं ? अहमपि ईषन्मूर्खः इति मन्ये । गच्छतु नाम मम मूर्खत्वविषयः । यदाऽहं महर्षिणा दीयमानमौषधं सेवे तदा

इतोऽपि अधिकबुद्धिमान् भवेयम् खलु। यस्य यावन्मात्रं ज्ञानं वर्तते, स तावन्मात्रं धनमर्जयति खलु रे"।

अन्यत्र त्रयो जनाः परस्परं आलपन्ति स्म ।

**प्रथमः अवदत्** - "मूर्खत्वेनैव खलु आहमित्थं रोदिमि। त्वं मूर्खाय मह्यमद्यैकदिनं तव बुद्धिं (सम्मतिं)देहि यन्मया एकशतरूप्यकाणामौषधं सेवनीयं वा आहोस्विद् द्विशतरूप्यकाणां"।

**द्वितीयः अभाषत** – त्रिशतरूप्यकाणामौषधं मया सेवनीयमिति मम भार्या मामवदत्। गत्वा तव भार्यया साकमालोच्य त्वयाऽपि निर्णेतव्यमिति तु मम सम्मतिः। किन्त्वेतद् विचित्रं यद् महर्षिणा कथं ज्ञानस्यौषधमन्विष्टम् वा"।

"एष समय एव विज्ञानस्य। पश्य रे! आधुनिकयुगे वैज्ञानिका मनुष्य इव भाषमाणानि यन्त्राण्यपि आविरकुर्वन्। इदानीमेव रष्यीयाः ईदृशं यन्त्रमेकं निर्मितवन्तः यत फ्रेञ्चभाषायामुक्तं रष्यन्भाषायामनुवदति किल! इथदूरं कुतः? तैलेन विना कथं विद्युद्दीपा ज़्वलन्ति वा वयं प्रत्यहं पश्यामः खलु! अनुपदमेवोपरि पश्य पश्य रे!! नभसि विमानं कथमुड्डीयते वा! एतदपि वैज्ञानिकैरन्विष्टम्। एवं स्थिते महर्षिणां किमसाध्यम्? भविष्ये अमरत्वप्रदानायाऽपि किमप्यौषधं निर्मापयिष्यन्तीति मन्ये"। इत्याह तृतीयः शिक्षितो जनः।

एतद्वचः श्रुत्वा प्रथमद्वितीयौ अवदताम् – "सम्यग्वदसि। अस्मद्ग्रामे तवैकस्यैव औषधसेवनस्यावश्यकता नास्तीति" ऊहावहे।

"यद्यहं ज्ञानस्यौषधे विक्रीयमाणे न सेवे, तर्हि मम किं ज्ञानं स्याद्रे। इदानीं तु तमेवाधिकज्ञानिनं मन्येरन् यः स्वज्ञानेन अधिकौषधं क्रेष्यति। अहं तु मम समीपस्थरूप्यकाणां सर्वेषामौषधं जुषे"। इति प्रत्यवदत् तृतीयः।

इत्थमेव सर्वत्र आधुनिकाविष्कृतविचित्रवस्तूनि ज्ञानस्यौषधञ्चाधिकृत्य आलपन्ति स्म जनाः।

परेद्युः प्रातःकाले एव सर्वे जना यथाशक्ति रूप्यकाणि गृहीत्वा महर्षेः परमानन्दस्य सन्निधिमगच्छन्। प्रथमतो महर्षेः शिष्या जनेभ्यः शुल्कस्य रूप्यकाणि ऊगृह्णन् प्रातः प्रभृति सायङ्कालपर्यन्तम्। सर्वे जना अहमहमिकया ज्ञानस्य शुल्कमयच्छन्। धनपत्राणां बृहन्तः पूगा अभवन्। ततः शिष्या एकघण्टापर्यन्तं तान् पूगान् महर्षेः सन्निधिं प्रापयन्।

यावत् परमानन्दमहर्षिर्बहिरागत्य सर्वेभ्यो दर्शनमदात, तावत् सर्वे जनाः सविनयं तमवन्दन्त। ततः महर्षिः सर्वान् जनान् उद्दिश्य इत्थमवदत–"कलिङ्ग-राजस्य पुत्रोऽहं। सर्वसुखेषु सुलभेष्वपि अनित्यं संसारासुखमिति मन्यमानोहं विरक्तोऽभवम्। ममैतावान् लोभविरहो येन केवलं शिष्यगणपोषणार्थं युस्मद् ज्ञानशुल्कं शतरूप्यकाण्येव अगृह्णाम्। अहमिदानीमेतावत्प्रभावशालित्वं प्राप्तवान् यदीच्छामि तर्हि यूयं सर्वे अत्र भस्मराशयो भविष्यथ। यूयं मूर्खत्वापनोदनाय मत्समीपमागच्छत। इदानीं सर्वत्र धर्मलोपो भौतिकसुखेच्छा चावलोक्यते। कश्चिदपि सर्वशक्तिमन्तं सृष्टिकर्तारं भगवन्तं न स्मरति। सर्वे संसारसागरे पतित्वा अधिकधनमार्जयितुं यतन्तो मूर्खा अभवन्। इदं महद्विचित्रं यदेतत्सर्वमनित्यमिति तेषां न विदितम्। धनं तृणतुल्यं यः पश्यति, स एव ज्ञानी। यः यावन्मात्र-मधिकधनमार्जयति स तावन्मात्रमूर्ख इति मन्तव्यम्। ज्ञानी स एव यः संसारत्यागी भूत्वा सदा भगवन्तमेव ध्यायति। स एव मुक्तिं स्वर्गञ्च प्राप्स्यति। मया बहुपरि-श्रमेणैतत् ज्ञानमन्विष्टम्। अतो मम वचः श्रुत्वाऽद्यप्रभृति स्वमूर्खत्वं त्यक्त्वा सर्वदा भगवन्तमेवावश्यमेकनिष्ठया स्मरत। तदेव ज्ञानम्। ये मम शिष्या भवितु-मिच्छन्ति, ते आगच्छन्तु" इति।

महर्षेः वचः श्रुत्वा सर्वे जना अन्योन्यमुखं द्रष्टुमारभन्त। महर्षिः शपेदितिभयेन वा आहोस्विद् महर्षेः कश्चिदपराधो नास्तीति मत्वा वा ईषदपि प्रतिवक्तुमपारयन्तः सर्वे जना यथातथं गताः।






रचयिता — **विजयरावः**

एका – किमार्ये ! त्वमेव पात्राणि प्रक्षालयसि ? दासी आसीत्किल !
पार्वति – बाढम् आसीत् । मयैव सा बहिष्कृता ।
एका – अये, कुतः बहिष्कृता ? सम्यगासीत किल ।
पार्वति – मम भर्तापीत्थमेव कथितुमारेभे । अत एवाहं, तां - ।

  

एका – किं भोः ! तृणं भक्षयसि ? अपसर इत्युक्ते नापसरसि ।
भिक्षुः – आर्ये ! प्रातः प्रभृति ममोदरे किमपि नास्ति ! अतीव बुभुक्षितोऽस्मि !
एका – गृहस्य पश्चाद्भागमागच्छ ।
भिक्षुः – (भिक्षापात्रं गृहीत्वा ससंभ्रमं) कुतः ? आर्ये !
एका – किमपि नास्ति तत्र इतोप्यधिकतरं तृणमस्ति !



## शृणुत

श्रृणुत शिलाहृदयेन, स्वेन, श्रृणुत जनाः सदयेन ॥
आसीत किल दक्षिणोदधिः दासीकृतः प्रभुणा रामेण ।
भूशाखामालिंग्य स्वपन् लेशमपि कल्लोलमभजन् ॥ ॥ श्रृणुत ॥
स रत्नाकारः स महोदधिः स गंभीरः स निश्चलात्मा ।
सागरः कुपितः साधुः कुपितः अमृते विषमुदभूत जलेग्निरभूत ॥ श्रृ ॥
स कल्लोलावलीरूदगमयत स ह्ययस्सेतुं व्यघटयत् ।
स चो द्वैलोग्रसत क्षेममपाकरोत्प्रजानाम् ॥ ॥ श्रृ ॥
कति जनाः कति पशवः कति क्षेत्राणि ।
कियन्ति कियन्ति धनानि धान्यानि च न जानीमोऽलिह्यत पयोधिजिह्वया ॥
धनुष्कोटिमुदप्लावयत घनक्षोभमारचयत् ।
क्षणे प्रलयमकल्पयत विना दयामानाशयत् ॥ ॥ श्रृणुत ॥



# "तिरुवैंपावै"

अनुवादकः —

"पावैप्रवचनभूषणम्" शिरोमणिः, हिंदीप्रचारकः

**यन्. एस्. ताताचार्यः, तंजापुरम्.**

( पूर्वानुबन्धः )

( ८ )

उच्चैः कूजति कुक्कुटो जलचरः पक्षी कलं भाषते
शंखो घोषति गायकाः श्रुतिसुखं गायन्ति लेखालये ।
तेजःपुञ्जमनश्वरं भवहरं नैसर्गिकीं तत्कृपाम्
गायामो वयमद्य न श्रुतवती वञ्चेति किं जृम्भितम् ॥ ॥ १५ ॥

आस्तां ते विजयः सदा कथमभून्निद्राप्यकाण्डे भृशम् ?
मौनं मोचय मन्दिरञ्च विवृतं संस्थापयालंकृते !
निद्राणस्य निदानमेतदभवत् श्रीपद्मनाभस्य किम् ?
आद्यं दीनसखं स्तुवीहि वचसा कात्यायनीसुव्रते ॥ ॥ १६ ॥

( ९ )

( इत्थं प्रबोधिताः ताः बालिकाः समेताः, परमेश्वरं श्रीशोणाचलेश्वरं कीर्तयन्त्यः स्नातुं तडागं प्रति गच्छन्ति )

प्रत्नं वस्त्वखिलेषु वस्तुषु भवान् प्राग्भाविषूद्घुष्यते
नूत्नं वस्तु तथैव नूतनतया सन्दृश्यमानेषु वा ।
देव ! त्वत्पदपंकजैकशरणास्सर्वास्सनाथास्त्वया,
त्वद्भक्तांश्च भजामहे परिसरे तेषां च वर्तामहे ॥ ॥ १७ ॥

तानेव प्रियनायकान् वृणुमहे तच्चोदितं कुर्महे,
तद्भक्तिप्रचुरास्तिलस्य पुरतो तैलं यथा सत्वरम् ।
साध्वीनां कुलदैवतं त्वमसि नस्तत्तुल्यमाजीवनं
दद्याश्चेत् सफलं च जन्म विहितं कात्यायनीसुव्रते ॥ ॥ १८ ॥

( १० )

( स्नानाय वापीं गच्छन्तीनां बालिकानां दृष्टिपथं गता रुद्रगणिकाः ।
तां: पृच्छन्ति बालिकाः )

यत्पादो वचसामभूमिरभवत् पाताललोकं गतः,
यच्छीर्षं च समस्तवस्तुविलयस्थानाद्गतश्चोर्ध्वतः ।
यत्पार्श्वे ललना ततो न हि हरस्यैकं च रूपं मतम्
भक्तानां हृदये वसन् विजयते दासोचितात्मप्रियः ॥ ॥ १९ ॥

वेदानां प्रथमोऽभवन्नविषयो मर्त्यामराणामहो !
निर्दोषान्वयजा वयं शिवमहादेवालयेऽधिष्ठिताः ।
कोऽयं तस्य पुरोऽभिधानमिह किम् ? द्वेष्यप्रियौ तस्य कौ ?
गातुं ते कतमप्रकार इह भोः ! कात्यायनीसुव्रते ॥ ॥ २० ॥

( ११ )

(एतावता बालिकाः प्रबोधिताः । सर्वास्संभूय प्रस्थिताः भगवन्तं परमेश्वरं स्तुवन्ति )

तप्तांगारसमानदेहविलसत्कल्याणगात्र प्रभो !
त्वद्भक्तानुगतान्ववायजननाः स्वामिन् ! त्वयाऽऽजीविताः ।
हस्तासेचनवारिविह्वललसद्भृङ्गाङ्गनामण्डिताम्
आविष्टास्तटिनीं तवाङ्घ्रिमहिमागानाभिरामाननाः ॥ ॥ २१ ॥

किंचिल्लाक्षितलोचनाञ्जनवधूनेत्रोत्पलोमापते !
स्वामिंस्तावकपञ्चकृत्यविहितैः प्रख्यापितामुत्तमैः ।
उज्जीव्यां च समस्तसाधुपदवीं प्राप्तास्समुज्जीविताः
अस्मान् तत्पथवञ्चिताः कुरु न भो कात्यायिनीसुव्रते ॥ ॥ २२ ॥

( १२ )

( स्नानप्रकारमादिशति काचित् )

तापं दुर्वहजन्मनां प्रशमनायास्मानिहानर्तयन्
तीर्थस्सन्नुतचित्सभाविलसितो लास्यं करोत्यग्निना ।
सर्गस्थेमलयादिपञ्चकविधिं द्यावापृथिव्योश्चरन्
क्रीडन्तं करकङ्कणारवमिलत्कल्याणतत्कीर्तनाः ॥ ॥ २३ ॥

॥ श्रीरस्तु ॥



## संस्कृतभाषाप्रचारिणी सभा, चित्तूरु (आं. प्र.)

# परीक्षानियमावलिः

प्लवंगवत्सरादि - सौम्यवत्सरान्तम्

( १९६७ - सेप्टंबरमासात् — १९७० - मार्चपर्यन्तम् )

१. **परीक्षाः –**

अनया सभया १. परिचयः, २. अभिज्ञः, ३. विचक्षणः, ४. समर्थः, ५. कोविदः इति पञ्च परीक्षाः प्रचाल्यन्ते ।

२. **परीक्षार्थिनः –**

संस्कृतभाषां पठितुं इच्छन्तः स्त्रियः, पुमांसः, बालाः, युवानः, सर्वेऽपि परीक्षाः दातुं शक्नुवन्ति ।

३. **परीक्षाकालः –**

सर्वाः परीक्षाः दक्षिणायने सिंहमासे ( सेप्टम्बर-प्रथमसप्ताहे ), उत्तरायणे कुम्भमासे च ( मार्च-प्रथमसप्ताहे ) प्रतिवत्सरं द्विवारं प्रचलेयुः ।

परीक्षातिथयः डिसंबर - जून् मासयोः द्वितीयसप्ताहे गैर्वाण्यां दैनिकपत्रिकासु च प्रकाश्येरन् ।

४. **आवेदनपत्रम् –**

सभामुद्रितमावेदनपत्रमेव परीक्षार्थिभिः पूरयित्वा प्रेषणीयम् । आवेदनपत्रं प्रधानकार्यालये अनुबन्धसभाकार्यालये च विना मूल्यं लभ्येत ।

आवेदनपत्रं, परिक्षाशुल्कं च दक्षिणायनपरीक्षायै जूलै २० तिथेः पूर्वं, उत्तरायण-परीक्षायै जनवरी २० तिथेः पूर्वं च प्रधानकार्यालयं प्रापणीये। तदनन्तरं दशदिनपर्यन्तमेव प्रत्यावेदनपत्रं ५० पै. विलम्बशुल्केन साकं स्वीक्रियेत। **शुल्कं धनादेश (M. O.) द्वारा एव प्रेषणीयम्।** आवेदनपत्रेण साकं स्वसङ्केतसहितं पत्रं (Post Card) प्रेषणीयम्। तस्य प्रतिप्रेषणेन आवेदनपत्रप्राप्तिः सभया सूच्येत। अनुबन्धसभाकार्यदर्शिभ्योऽपि आवेदनपत्रं, शुल्कं च साक्षात् दातुं शक्नुवन्ति।

## ५. परीक्षाकेन्द्रविषयाः –

पंचान्यूनविद्यार्थिसत्त्वे एव केन्द्रं स्थापयितुं शक्यते। एकस्मिन्नेव ग्रामे नगरे वा द्वे केन्द्रे माङ्गीक्रियेयाताम्। ग्रामान्तरे वा एकस्य केन्द्रस्य क्रोशद्वयाभ्यन्तरे अन्यत् केन्द्रं न स्वीक्रियेत। एतत्सभायाः अनुबन्धसभास्थले तत्कार्यदर्शिद्वारा केन्द्राभ्यर्थनपत्रं प्रेषणीयम्।

मुद्रितं केन्द्राभ्यर्थनपत्रं प्रधानकार्यालये विना मूल्यं लभ्यते। केन्द्राभ्यर्थनपत्रं परीक्षादिनात् एकमासात्पूर्वं कार्यालयं प्रापणीयम्। पश्चात्, परीक्षार्थिनां पर्याप्तत्वे इतरयोग्यतायां च कार्यालयात् केन्द्र-स्वीकृतिपत्रं प्रेष्येत।

प्रायः विद्यालयप्रधानाध्यापक एव केन्द्राध्यक्षः स्यात्। संस्कृत-पंडितः, भाषापंडितो वा केन्द्राध्यक्षः भवितुमर्हति। परीक्षार्थी कदापि केन्द्राध्यक्षः भवितुं नार्हति।

**यदि आवेदनपत्रनिर्दिष्टे अस्थायिकेन्द्रे पंचन्यूनाः परीक्षार्थिनः स्युः, तर्हि अन्यस्मिन् केन्द्रे परीक्षां दातुं ते आदिश्येरन्।**

केन्द्रपरिवर्तनं अभिलषद्भिः रू १–०० साकं परीक्षादिनात् १५ दिनेभ्यः पूर्वं प्रार्थनापत्रं प्रेषणीयम्।

केन्द्रस्थापनविषये, केन्द्रपरिवर्तनविषये च यथाकालं प्राप्तं प्रार्थनापत्रं प्रत्येव परामर्शः क्रियेत।

६. **लिपिः** –

परीक्षार्थिभिः संस्कृतभाषा **देवनागरीलिप्यैव** लेखनीया। अनुवादादिकं तत्तल्लिप्या लेखनीयम्।

७. **परीक्षाफलितांशः** –

परीक्षादिनात् सार्धैकमासाभ्यन्तरे गैर्वाण्यां दैनिकपत्रिकासु च प्रकाश्येत।

८. **प्रमाणपत्रम्** –

ततः परं योग्यतापत्राणि, अङ्कपट्टिका च केन्द्राध्यक्षाय प्रेष्येरन्। योग्यतापत्रस्य स्वसंकेतं प्रति प्रेषणमभिलषद्भिः स्वसंकेतनिर्देशपूर्वकं एकं रूप्यकं प्रेषणीयम्। प्राप्तांकजिज्ञासायां ५० पणाः (पैसाः) प्रेषणीयाः।

नष्टप्रमाणपत्रस्य पुनःप्राप्तये वत्सर-क्रमसंख्यादिविवरणपूर्वकं एकं रूप्यकं प्रधानकार्यालयं प्रति प्रेषयित्वा, तत्प्रतिकृतिः प्राप्तुं शक्यते।

९. **पत्रव्यवहारसङ्केतः** –

सर्वाणि पत्राणि, आवेदनपत्राणि, शुल्कं, पुस्तकमूल्यं, गैर्वाणी-सदस्यता, सभ्याताशुल्कं इत्यादीनि अधोनिर्दिष्टसङ्केतेनैव प्रेषणीयानि — प्रधानमन्त्री,

**संस्कृतभाषाप्रचारिणी सभा, चित्तरु (A. P.)**

---

॥ श्रीः ॥

# पाठ्यपुस्तकसूची

## १ परिचयपरीक्षा

(इयं परीक्षा भानुवासरे प्रातः १० घण्टाप्रभृति १२ घण्टापर्यन्तं प्रचलेत्)

**शुल्कं रु. १–५०** * **एकमेव प्रश्नपत्रम्**

| | | |
|---|---|---|
| १. संस्कृतभाषाबोधिनी - प्रथमा | (सभाप्रकाशिता) | ०–५० |
| २. संस्कृतभाषाबोधिनी - द्वितीया | ” | ०–७५ |
| ३. रामकथा | ” | ०–२५ |
| ४. शब्दमञ्जरी (साधारणशब्दा एव) | ” | ०–७० |

* एतानि पुस्तकानि सभायां लभ्येरन्।

# २ अभिज्ञपरीक्षा

( इयं परीक्षा भानुवासरे प्रातः १० घण्टाप्रभृति १२ घण्टापर्यन्तं, सायं २ घण्टाप्रभृति ४ घण्टापर्यन्तं च प्रचलेत् )

**शुल्कं रू. ३–००** * **द्वे प्रश्नपत्रे**

**प्रथमं पत्रम्**

| | | |
|---|---|---|
| १. | संस्कृतभाषाबोधिनी - तृतीया (सभाप्रकाशिता) | १-०० |
| २. | कथावलिः (सभाप्रकाशिता) | ०–६० |

**द्वितीयं पत्रम्**

| | | |
|---|---|---|
| १. | रघुवंशे द्वादशः सर्गः (लघुटीकायुतः सभाप्रकाशितः) | ०–५० |
| २. | कुमारसम्भवे तृतीयः सर्गः ( " ) | ०–६० |
| ३. | शब्दमञ्जरी (सर्वनामशब्दाः विशेषशब्दाश्च) " | ०–७० |

* एतानि पुस्तकानि सभायां लभ्येरन् ।

**अवधेयम्** — उत्सुकाः विद्यार्थिनः परिचयपरीक्षां विनैव साक्षात् इमां परीक्षां दातुं शक्नुवन्ति ।

# ३ विचक्षणपरीक्षा

( इयं परीक्षा शनिवासरे सायं २ प्रभृति ५ पर्यन्तं, भानुवासरे प्रातः १० प्रभृति १ पर्यन्तं, पुनः सायं २ प्रभृति ५ पर्यन्तं च प्रचलेत् )

**शुल्कं रु. ४–००** * **त्रीणि प्रश्नपत्राणि**

**प्रथमं पत्रम्**

| | | |
|---|---|---|
| १. | गद्यसंग्रहः (सभा प्रकाशितः) | ०–८० |
| २. | स्वप्नवासवदत्तम् | |
| ३. | संस्कृतभाषाबोधिनी चतुर्थी (सभाप्रकाशिता) | १–५० |

**द्वितीयं पत्रम्**

| | | |
|---|---|---|
| १. | शिशुपालवधे प्रथमसर्गः | ०–६० |
| २. | किरातार्जुनीये तृतीयसर्गः | ०–४० |
| ३. | नीतिचन्द्रिका (सभायाः) | ०-३० |

४. समासकुसुमावलिः (सभायाः) ०–२५
५. धातुचन्द्रिका (सभायाः) मुद्रणे
६. सन्धिविवेकः (सभाप्रकाशितः) ०–२५

### तृतीयं पत्रम्

व्यासरचना — संकृते प्रान्तीयभाषायां च ।
१. बालनिबन्धमाला (काशी) ०–७५

* एतानि पुस्तकानि सभायां लभ्येरन् ।

**अवधेयम्** — अभिज्ञपरीक्षायां उत्तीर्णा एव विचक्षणपरीक्षां समाधातुं अर्हन्ति । योग्यपण्डितात् प्रमाणपत्रं प्रसवन्तः अर्हाः विद्यार्थिनः तथा यस्. यस्. यल्. सि. परीक्षायां संस्कृते उत्तीर्णाश्च रूप्यकत्रयं प्रेषयित्वा, विशेषानुमतिं लब्ध्वा साक्षात् विचक्षणपरीक्षां समाधातुं शक्नुवन्ति ।

——:o:——

# ४ समर्थपरीक्षा

अस्यां परीक्षायां प्रथमखण्ड़ः द्वितीयखण्डः इति द्वौ खण्डौ स्याताम् । प्रतिखण्डं द्वे प्रश्नपत्रे भवतः । खण्डशः वा, मिलित्वा वा परीक्षां समाधातुं शक्नुवन्ति । प्रतिखण्डं रूप्यकत्रयं शुल्कं भवति । शनिवासरे प्रातस्सायं प्रथमखण्डे, भानुवासरे प्रातस्सायं द्वितीयखण्डे च परीक्षा प्रचलेत । खण्ड़द्वये उत्तीर्णतानन्तरमेव योग्यतापत्रं दीयेत । सकृत्पूर्णतयोत्तीर्णानामेव श्रेणी गण्येत, न तु खण्डश उत्तीर्णानाम् ॥

### प्रथमः खण्डः

( शनिवासरे )

**प्रथमं पत्रम्** ※

( प्रातः १० प्रभृति घण्टात्रयम् )

१. कादंबरी पूर्वभागः
२. चम्पूरामायणे सुन्दरकाण्डमात्रम् ०-३५
३. भर्तृहरिसुभाषितेषु नीतिशतकमात्रम्
४. कालिदासनाटककथामंजरी

**द्वितीयं पत्रम्**

(मध्याह्ने २ प्रभृति घण्टात्रयम्)

१. चन्द्रालोकः
२. सरलव्याकरणम् (सभायाः) मुद्रणे

## द्वितीयः खण्डः

( भानुवासरे )

| प्रथमं पत्रम् | द्वितीयं पत्रम् |
| --- | --- |
| ( प्रातः १० घण्टातः १ पर्यन्तम् ) | ( मध्याह्ने २ घण्टातः ५ पर्यन्तम् ) |
| १. मालविकाग्निमित्रम् | संस्कृते प्रान्तीयभाषायां च व्यासरचना |
| २. प्रतिज्ञायौगन्धरायणम् | व्यासमञ्जरी (सभायाः) १–५० |

**अवधेयम्** — विचक्षणपरीक्षायां उत्तीर्णा एव समर्थपरीक्षां समाधातुं शक्नुवन्ति तथा भाषाप्रवीण-विद्वान् (ए) परीक्षयोः प्रवेशपरीक्षायां उत्तीर्णाः, एवं इन्टरपरीक्षायां संस्कृते उत्तीर्णाश्च रूप्यकत्रयं, तत्तद्योग्यता-पत्रं च प्रेषयित्वा, विशेषानुमतिं प्राप्य साक्षात् समर्थपरीक्षाया-मुपवेष्टुमर्हन्ति ।



# ५ कोविदपरीक्षा

अस्यां परीक्षायां पञ्च खण्डाः वर्तन्ते । खण्डशो वा मिलित्वा वा, यथेच्छं परीक्षां समाधातुमर्हन्ति । प्रथमपर्याये एकखण्डस्य सकल-खण्डानां वा दश (१०) रूप्यकाणि शुल्कं भवति । पश्चात् प्रतिखण्डं रूप्यकत्रयं (३) शुल्कम् । इयं परीक्षा शनिवासरे प्रथमद्वितीयखण्डयोः, भानुवासरे तृतीयचतुर्थखण्डयोः, इन्दुवासरे च प्रातः पंचमखण्डे प्रचलेत् । खण्डपञ्चके उत्तीर्णानन्तरमेव योग्यतापत्रं दीयेत । सकृत् पंचसु खण्डेषु उत्तीर्णानामेव श्रेणीनिर्देशः नान्येषाम् ॥

## प्रथमः खण्डः

(शनिवासरे घं १०–२)

१. संस्कृतकलापूर्णोदयः ( या-मल्लिकार्जुनरावः ए. यन्. कलाशाला, राजमहेन्द्रवरम् ) ३–००

२. पारिजातापहरणचंपूः

३. नैषधम् (पंचमषष्ठसर्गौ)

## द्वितीयः खण्डः

(शनिवासरे घ २–५)

१. अभिज्ञानशाकुन्तलम्
२. वेणीसंहारः
३. उत्तररामचरितम्

## तृतीयः खण्डः

(भानुवसरे घं १०–२)

संस्कृते देशभाषायां च व्यासरचना

व्यासमञ्जरी (सभायाः) १–५०

अधोनिर्दिष्टसंस्कृतपत्रिकाणां पठनेनापि व्यासरचनापद्धतिः ज्ञातुं शक्या —

१. गैर्वाणी सभायाः मासिकी पत्रिका (वार्षिकम्) रू ४– ००
२. "संस्कृतम्" साप्ताहिकम्, (अयोध्या U. P.)
३. संस्कृतभवितव्यम् (नागपूर)

## चतुर्थः खण्डः

(भानुवासरे घं २–५)

१. लघुकौमुदी
२. प्रतापरुद्रीयम् (नाटकोदाहरणवर्जं)

## पञ्चमः खण्डः

[पत्रेऽस्मिन् अधोनिर्दिष्टविषयेषु नवसु यःकश्चित् विषयः ग्राह्यः]

१. **धर्मशास्त्रम्** – याज्ञवल्क्यस्मृतिः (मिताक्षरासहिता)
२. **मीमांसा** – (क) मीमांसान्यायप्रकाशः
(ख) जैमिनीन्यायमाला (१, २, ३, अध्यायाः)
३. **न्यायः – कारिकावलिः (मुक्तावलिदिनकरीयसहिता)**

४. व्याकणम् – सिद्धान्तकौमुदी (उणादिवर्जं कृदन्तान्ता च)
५. वेदान्तः – (क) भगवद्गीता (अन्यतमभाष्यसहिता)
(ख) ईशकेनकठप्रश्नमुण्डमाण्डूक्यतैत्तिरीयोपनिषदः (सभाष्याः)
६. अलङ्कारः – काव्यप्रकाशः
७. ज्यौतिषम् – (क) सर्वार्थचिन्तामणिः
(ख) कालामृतम्
८. आयुर्वेदः – भावप्रकाशः (निघंटुवर्जं)
९. पुराणम् – विष्णुपुराणे चतुर्थपंचमषष्ठांशाः

**अवधेयम्** — समर्थपरीक्षायां उत्तीर्णा एव कोविदपरीक्षां समाधातुं शक्नुवन्ति। राजकीय-संस्कृत-प्रवेशपरीक्षोत्तीर्णैः तथा भाषाप्रवीण - परीक्षयाः, विद्वान् (ए) परीक्षायाः वा प्रिलिमनरी परीक्षायां उत्तीर्णैश्च रूप्यकत्रयेण च साकं प्रार्थनापत्रे प्रेषिते सति साक्षात्प्रवेशाय अनुमतिः प्राप्येत।

प्राचीनप्रश्नपत्राणि, परिचय – अभिज्ञ – विचक्षणपाठ्यपुस्तकानि, तथा परिचय (०–७५ पै.) अभिज्ञ (१–५० पै.) (तेलुगु) कुञ्चिके च सभायां लभ्येरन्। प्राचीनप्रश्नपत्रप्रेषणाय ०-२५ मुद्राः (Postal Stamps) प्रेषणीयाः।

समर्थ-कोविदपरीक्षापाठ्यपुस्तकानि तु अधोनिर्दिष्टपुस्तकशालासु प्रायशः लभ्येरन् —

१. चौखाम्बा संस्कृत सीरीस् आफीस्, गोपालमन्दिर् लेन्, पोस्ट् बाक्स् नं. ८. बनारस् - १.
२. निर्णयसागर प्रेस, २६-२८ कोलभट्ट वीथी, बाम्बे-२.
३. श्री वेङ्कटेश्वर स्टीम् प्रेस, बाम्बे-४.
४. वाविल्ल प्रेस, मद्रास-२१.
५. बालमनोरमा प्रेस, मैलापूर, मद्रास-४.



केचनैव महानुभावाः स्वच्छन्दं स्वच्छन्दं प्रेषितवन्तः । तेषां शुभनामानि अधः दीयन्ते । अन्यानपिप्रार्थये स्वकं अवलम्बमपि प्रदातुम् । ति. कं. ति.

# Names of Subscribers for Gairvani 1965.

(Continuation)

| | | | |
|---|---|---|---|
| 23. | B. L. Shanbhogue, Baroda. | 4 | 00 |
| 24. | K. Hanumantha Rao, Baroda. | 4 | 00 |
| 25. | M. Krishnappa, Saraswathi Unian, Mysore | 4 | 00 |
| 26. | L. U. Maheswara Iyar, Madurai-1. | 4 | 00 |
| 27. | Cheppalli Narasimham, Chillamanuchenu. | 4 | 00 |
| 28. | T. K. Rangaramanujacharyulu, Rajahmundry. | 10 | 00 |
| 29. | Dr. P. Ramachandrappa, Dhenuvakonda | 4 | 00 |
| 30. | Narayanamurthy, Gunturu. | 4 | 00 |
| 31. | C. L. Prabhakar B. Sc,. Rampur, Dharwar. | 4 | 00 |
| 32. | S. B. Bobbi M. A., Dharwar. | 4 | 00 |
| 33. | Veeraraghavachar, Bangalore | 4 | 00 |
| 34. | K. Jagannatham B. Sc., Mayuram. | 4 | 00 |
| 35. | V. Anjaneya Sarma M. A., Madanapalli. | 4 | 00 |
| 36. | Kuchibhatla Vijayalakshmi, Pedapalem. | 4 | 00 |
| 37. | H. Venugopal Rao Adoni. | 4 | 00 |
| 38. | P. L. N. Sastry, Kuchipudi. | 4 | 00 |
| 39. | Gadde Subba Rao, Kothapatnam. | 4 | 00 |
| 40. | A. Ramakrishna Sastry, and his friend. | 8 | 00 |
| 41. | K. G. Jayachandra Sastry, Kothapalem. | 4 | 00 |
| 42. | A. Varadarajan, Peeleru (60+56=116) | 56 | 00 |
| 43. | B. Rangacharya, Sulurpet. | 4 | 00 |
| 44. | Madhavachaithanya Brahmachari Varanasi. | 4 | 00 |
| 45. | Padala Brahma Reddy, Konkuduru | 4 | 00 |

( सशेषम् )

R. N. 8145/60. Postal No. R. H. 493.

# अस्मत्सभायाः

सहस्ररूप्यकप्रदात्री

## श्रीमती मञ्जुभाषिणी अम्माळ्

श्री मि. वेङ्कटरमणास्य धर्मपत्नी

चित्तूरु

Published by Sri Ramanatha Iyer, B., A., B. L., Advocate & Secretary,
S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T. K. Thiruvengadacharya,
at Vijaya Press, Chittoor (A. P.) C. 1000.